इतीदमुक्तं निखिलं यथातथं *
तदन्ववेक्ष्यं सततं भिषग्विदा ।
तथा हि सिद्धिश्च यशश्च शाश्वतं
स सिद्धकर्म्मा लभते धनानि च ॥ ४३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने गोमयचूर्णीयमिन्द्रियं नाम द्वादशोऽध्यायः ॥ १२ ॥

श्लोकसङ्ख्या ॥ ४०५ ॥

गङ्गाधरः—अथैतदिन्द्रियस्थानस्य ज्ञाने वैद्यानां फलमाह—इतीदमित्यादि । सिद्धिं क्रियासिद्धिम् ॥ ४३ ॥

अध्यायं समापयति—अग्नीत्यादि । इतीन्द्रियस्थानं सम्पूर्णम् ।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतराविन्द्रियस्थानजल्पे पञ्चमस्कन्धे गोमयचूर्णीयद्वादशाध्यायजल्पाख्या द्वादशी शाखा ॥ १२ ॥

सिद्ध्याश्रयञ्च यथा—'इष्टालम्भः सुखेन च' इति ग्रन्थोक्तम् । इतीत्यादिनेन्द्रियस्थानोक्तं प्रमेयजातं महाफलत्वेनावश्यबोध्यतयोपदर्शयन्नुपसंहरति ॥ ४२ । ४३ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्य्यटीकायाम् इन्द्रियस्थाने गोमयचूर्णीयेन्द्रियं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

समाप्तमिदमिन्द्रियस्थानम् ।

॥ श्रीः ॥

---

* यथा तथा इत्यपि पाठः ।

